श्रीमदनंतो विजयतेतराम ।



विष्णु-श्री-हनुमन्महेश्वर-गणाधीशादिदेवौकसां
जीर्णोद्धारविधिं तथा बुधमतं संप्रोक्षणादिक्रमम् ॥
श्रीवायोरवतारमध्वरचित श्रीतन्त्रसारोद्धृतं
संगृह्यातनवं नवं सुजनतापेक्ष्यं प्रबन्धद्वयम् ॥

अथ तंत्रसारोक्त

# जीर्णोद्धारहवनपद्धतिः संप्रोक्षणविधिश्च

लेखकः —
बुर्लीत्युपाह्वः राघवेन्द्राचार्यः

वैदिक ग्रन्थप्रकाशन निलयः, गदग

मूल्यम् — रूप्यकद्वयम्

श्री

# सदभिप्रायपत्रम् ।

श्री वे॥ बुलि इत्युपाव्ह राघवेंद्राचार्याणां सकाशे
सप्रणामपुरःसरं निवेदयामि—

अस्मतां जीवनं सफलं जातं – भवता कुलपरंपराप्राप्तं – धर्मं अनुसृतं । यथा भवतः पितृभ्रात्रादिभिः कृतं तथैव भवद्भिः कृत । बाल्ये ऋग्यजुःशाखाध्ययनं कृतं । अनंतरं बेळगांव - अश्वत्थनृसिंह देवस्थाने बागलकोट इत्यादि स्थलेषु पाठशालासु अनेकेच्छात्राः अध्यापनेन उभयशाखायाज्ञिक तंत्रप्रवीणाः कृताः । अधुना चरमे वयसि कृतपुरे उषित्वा श्रीमत्तंत्रसारानुसारि प्रयोगप्रथानां अमुद्रितानां प्रकाशनं च कृतं । अतएव धन्यवादं करोमि ।

भवद्भिः प्रकटिताः वास्तु – धन्वंतरिहवन – मूर्तिप्रतिष्ठा – जीर्णोद्धार – संप्रोक्षण – दशमस्कंधहवन – ऋग्यजुःश्राद्धपद्धति – वैष्णवाह्निक – प्रभृतयः ग्रंथाः मया आलोकिताः अनेन महान् हर्षः संजातः । एते ग्रंथाः अत्यंतोपकारका जाता । अनवरतं ग्रंथप्रकटनोद्योगरतानां भवतां । श्रीमन्मध्वांतर्गत वेदव्यासः आयुरारोग्यं दत्वा ग्रंथप्रकटीकरणे उत्साहम् वर्धयतु इत्यासे

भवदीयः

सांगलि — विद्वान् माधवशर्मा मठकर

दि. १०–९–६९ — मुधोळ

श्रीमदनतो विजयतेतराम् ।



विष्णु-श्री-हनुमन्महेश्वर-गणाधीशादिदेवौकसां
जीर्णोद्धारविधिं तथा बुधमतं संप्रोक्षणादिक्रमम् ॥
श्रीवायोरवतारमध्वरचित श्रीतन्त्रसारोद्धृतं
संगृह्यातनवं नवं सुजनतापेक्ष्यं प्रबन्धद्वयम् ॥

अथ तंत्रसारोक्त

# जीर्णोद्धारहवनपद्धतिः संप्रोक्षणविधिश्च


लेखकः –

बुर्लीत्युपाह्वः राघवेन्द्राचार्यः



वैदिक ग्रन्थप्रकाशन निलयः, गदग

शके १८९१

सौम्य संवत्सर भाद्रपद शुक्ल अनंतचतुर्दश्याम् प्रकाशितः

मुद्रकः
प. शे. होंबाळी
न्यू गदग प्रिंटरी, गदग

प्रकाशकः
बुर्लि इत्युपाव्हः राघवेंद्राचार्यः
वैदिक ग्रंथप्रकाशन निलयः, गदग

सन् १९६९

श्रीमदनंतो विजयते ।

## जीर्णोद्धारसंप्रोक्षणयोः विषयानुक्रमणिका ।





श्रीलक्ष्मीनृसिंहो जयति ।

# प्रस्तावना ।

श्रीसर्वज्ञगीतोपनिषद्ब्रह्मविद्यायोगशास्त्राचार्याभिमतानुष्ठान श्रद्धानुसूयावतां कर्मलेपोनभवतीति सुप्रसिद्धसिद्धांतानुसारं इदानीं लुप्तप्रायमेवदृश्यते ।

येत्वेतदभ्यसूयंतोनानुतिष्ठंति मे मतं सर्वज्ञानविमूढान् तान् बुद्धिनष्टान् अचेतसः । इत्युक्तप्रकारेण सत्सिद्धांतानुसार शिष्टाचारपरंपराध्ययनाध्यापनादिरहितानां अस्मदीयानां ज्ञानविमूढत्वपरिहारार्थ सज्जनोपकारकबुद्धियुक्ताः अस्मत्प्रियसुहृद्वरेण्याः बुर्ली राघवेंद्राचार्याः बहुकालपरिचिताः सत्सिद्धांतानुसारविध्युक्तानुष्ठानपराः । इदानीं सत्सिद्धांतानुसारानुष्ठान सौलभ्याय नित्योपयुक्त आवश्यकग्रंथान् अनेकान् प्रकाश्य इदानीं परंपराप्राप्त आचारस्थानप्रदेशानां जीर्णत्वादिदोषपरिहारपूर्वक श्रीमद्भगवदभिमत आचारानुष्ठानसौलभ्यार्थ जीर्णोद्धारपूर्वक संप्रोक्षणादि अनुष्ठानेन सत्फलप्रापकग्रंथं विरचय्यप्रकाश्यते। अयंग्रंथःपूर्वपरंपराप्राप्तविधानानुसारेणैव अस्ति । अतः ग्रंथमेन साधुप्रज्ञासौजन्यशालिनः दृष्ट्वा संतुष्यति । अतः एतेषांसर्वग्रथानुसारेण धर्माचारादीन् अनुष्ठाय आनंदेनसुफलंप्राप्नुवंतु इति आशास्ये । एवं एतादृशसदाचारानुष्ठानप्रदर्शकान् ग्रंथान् निर्माय्य प्रकाशयितुं आयुरारोग्यादि सर्वसंपदादिकं भगवान् श्रीकृष्णः प्रददातु इति संप्रार्थ्य विरमामि । इति शं ।

**ताताचार्य समीरणाचार्य पांध्री, बेळगांव**
**व्यासाश्रम – ठळकवाडी**



## प्रकाशक निवेदनम् ।

श्री मदानन्दतीर्थ भगवत्पादविरचित: तंत्र सारप्रबन्ध: सर्वार्थविश्राणनात्कल्पवृक्षमप्यवकल्पयन् पुरुषार्थमप्यधिकारविशेषवनात्प्रदत्तातीति न पराञ्चिचनमिदं प्रेक्षावताम् । अतएव अभिरूपशेखरा: षडर्धविक्रमाचार्या: सुमध्वविजये उक्तिमुक्ता फलमभियुक्ततममेवेदमुदगिरन्

"कस्तंत्रसारमासाद्य न स्यात्पर्याप्तवाञ्छित:" इति ।

"कुरु भुंक्ष्व च कर्मनिजंनियतं हरि पादविनम्रधिया सततं" इति अनुशासाना: सर्वज्ञप्रभव: नित्यनैमित्तिकनियतकर्माचरण प्रकारमर्हतामुपदिदिक्षयोपचिकीर्षया चोपदर्शयितुं पंचरात्राद्यागमानुसारेण मन्त्रतन्त्रविधिविधानादीनि संगृह्य जग्रन्थु ग्रन्थ मणिं तं तंत्रसारनिर्णयम्

सद्वैष्णवपद्धत्यनुसारेण वास्तुशान्ति, जीर्णोद्धार, संप्रोक्षण, नूतनमूर्तिप्रतिष्ठादि नैमित्तिककर्मक्रमनिर्देशकग्रन्थानामभावमुपलक्ष्य बहो: कालादेव आसीन्नो मनीषा तंत्रसारानुसारि धार्मिकाचारग्रन्थपञ्चकं प्रकाशनीयमिति । भगवत:करुणावरुणालयस्य श्रीमदनन्तस्य प्रसादमहिम्ना फलेग्रहि: संजात: सोयमस्मन्मनोरथद्रुम: अनेनच जीर्णोद्धार संप्रोक्षण ग्रन्थद्वय प्रकाशनेन । अस्मद्गुरुणां भूसुरकल्प तरूणां प्रातस्मरणीय श्री १०८ श्री सत्यध्यानतीर्थ श्री चरणानां निरवग्रहेण अनुग्रहेण महोदारचेतस्कानां कतिपयग्राहकानुग्राहक दातॄणां साहाय्यसहकारेण च श्रीमत्तंत्रसारानुसारि वास्तुशान्ति, धन्वंतरिमहामन्त्रहवन पद्धति, नूतनमूर्ति

प्रतिष्ठादि ग्रन्था अस्माभिः इतः पूर्वमेव प्रकाशपदवीमुपनीता इति जानन्त्येव नः सुहृदः सहृदयाश्च ।

अस्मत्सांप्रदायिक वैदिक वाङ्मये देवदेवालयादि जीर्णोद्धार विधिविधान प्रदर्शक प्रबन्धराहित्येन क्लिश्यन्तो बहवो माध्व-याज्ञिक पुरोहिता अगत्या अद्वैतसांप्रदायिकाचारग्रन्थानेव अनुरुध्य अनुसृत्यच संप्रोक्षणजीर्णोद्धारादि वैदिक कार्यकलाप निर्वयन्तस्तत्र तत्र दृष्टिपथमुपगच्छन्ति पुरग्रामाग्रहारक्षत्रग्रामटिकादिग्रामेषु ।

अयं च नः संप्रोक्षणजीर्णोद्धारोभय क्रियाविधिपथप्रदर्शकः प्रबन्धः तथाविधानां च नित्यनैमित्तिक वैदिककर्मकारकाणां महीयसां पुरोधसां श्रीमन्मध्वभगवत्पादप्रणीत तंत्रसारानुसारि वैदिक कर्माचरणप्रकारप्रणाडिकामुपदर्शयन् नितान्तमेव उपकुर्यादिति प्रत्येति नश्चेतः। इतर वैदिककर्मकाण्डग्रन्थजातमपि सुनिपुणमभि-वीक्ष्य सविमर्श परिशील्य च वैदिकवैष्णवक्रियाकलापोपयुक्तांशान् संगृह्य गुरुमध्वसूचित-मंत्रतंत्रादीनां सुस्पष्टप्रदर्शनेन अस्मत्प्रकटित पूर्वापूर्वग्रन्था इव एतद्ग्रन्थद्वन्द्वमपि नितान्तमुपयुक्ततममेव स्याद् वैदिकविश्वस्येति विश्वस्यैव व्याप्रियामहे निश्शङ्कातङ्कमेतस्य मुद्रणप्रकाशनादि साहसकर्मणि।

नायमस्मत्प्रयत्नसातत्यप्रसूतःप्रबन्धः दोषलेशतोऽप्यस्पृष्टः सर्वाङ्गसुन्दर इति वृथा अभिमन्यामहे। "सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृता" इति भागवतीमुक्तिमनुसृत्य लेखकानवधानेन स्युरेवात्रापि पुस्तके काश्चन त्रुटयः। दृश्येयुरपि मुद्रकानां पांडुलिपि शोधकानां च प्रमादेन कानिचनस्खालित्य वैयात्यानि। तदर्थं

"क्षाम्यन्तु मे हन्त मुहुर्मुहान्तः" इति प्रणतेन मूर्ध्ना क्षमापनाञ्ज-लिमाबध्नीमः प्राज्ञपरिवृढानां पुरस्तात् । सानुनयमनुनाथामहे च श्रीमतो धीमतः 'यदिस्युर्दृग्गोचरा एतस्यां कृतौ केऽपि प्रमादा स्तर्हि तान् समुपदर्शयन्तु नःसत्वरमेव येन द्वितीयस्यामस्यावृत्तौ सपद्येत नस्सौकर्य तान् शोधयितुमपनोदयितुं चेति ।

अस्माकमितरसकलग्रन्थानामिव अस्यापि सप्रोक्षणजीर्णोद्धार ग्रन्थस्य प्रसङ्गोचित मंगलपद्यमुकुटमण्डनेन सौन्दर्य सौभाग्य सुषुमां विशेषयतां माध्वपंडितेषु ऐदं प्राथम्येन राष्ट्रपतिप्रशस्तिविजेतृणां कविकुलललामानां अभिनवभट्टबाणसाहित्यरत्नेत्यादिबिरुदभाजां पण्डितप्रकाण्ड गलगली रामाचार्याणां सुधीमणीनां उपकारातिशयं कैर्वा शब्दैर्व्यावर्णयामः ? कथं वा अनृणीभवामः केवल शाब्दिका-भिनन्दनैः ?

सकाले ग्रन्थमेनं सुन्दराक्षरैः समुद्रय उपकुर्वतां श्री पी. एस्. होंबाळी महोदयानां तथा आर्थिकसाहाय्यदानेन च अन्यान्यविधा-भिश्च एतद्ग्रन्थ प्रकाशन कर्मणि सकलसौकर्यमितरदानुकूल्यचंनः समुपकल्पितवतां समेषामपि सुहृद्बन्धूनामुपकृतिभरं सधन्यवाद-वितरणं संस्मरामः सर्वदापि ।

अस्य ग्रन्थस्य सुन्दरतमां सर्वहृदयग्राहिणीं प्रस्तावनां विलिख्य प्रथितरतः 'वैदिककोश' 'पवमानमंडलादिनैकापूर्व ग्रन्थक-र्तॄन् अनवरत वेदार्थविमर्शनतत्परान् श्री पांग्रीताताचार्य महोद-यान् सानन्दमभिनन्दामः ।

अचिरादेव च नैमित्तिककर्मसंग्रह नामकं बृहत्प्रबन्धमेकं प्रकटीचिकीर्षामः । एतावत्कालपर्यन्तं दशपञ्चदश वैदिकजनो-पयुक्त ग्रन्थान् नः निमित्तीकृत्य प्रकाशनपथं प्रापयन् करुणार्णवः भगवान् वीरनारायणः एवमेव पुरस्तादपि विविधात्यमूल्यात्युपयु-क्तकृतीः अस्मद्वैदिकग्रन्थ प्रकाशननिलयद्वारा प्रकाशनपदमुपनेष्यतु प्रत्यूह व्यूहं च अपनेष्यतु इति संप्रार्थयामहे ।

अन्ते च अस्मत्कुल स्वामिनं एतद्ग्रन्थस्य निरन्तराय परिसमाप्तिकारणं भक्तानां अनंतहस्तेन सुखसौभाग्यादि दिशन्तं अनंतकल्याण गुणाकरं 'सत्यं ज्ञान अनन्तं ब्रह्म' भूयो भूयोभिवन्द्य विरमामो विस्तराद इति शम् ।

बुर्लीत्युपाव्हः श्री राघवेंद्राचार्यः
वैदिकग्रन्थप्रकाशन निलयः, गदग



श्रीः

आनन्दतीर्थवरदे दानवारण्यपावके ।

ज्ञानदायिनी सर्वेशे श्रीनिवासेऽस्तु मे मनः ॥




श्रीमहालक्ष्मीवेङ्कटेशचरणारविन्दयुगले

समर्पणम्

# मङ्गलाचरण श्लोकाः ।



सुजनहृदि वसन्तं स्वाश्रितान्मोदयन्तं
विपदमपहरन्तं संपदस्संदिशन्तम् ॥
जलधिदुहितृकान्तं नीलभासा लसन्तं
कृतनति भगवन्तं श्रेयसे नौम्यनन्तम् ॥ १ ॥

श्रेयःप्रदात्रे विपदां निहन्त्रे
दुष्टप्रहर्त्रे हरिगानकर्त्रे ॥
प्लवङ्गभर्त्रेऽपि च भाविधात्रे
प्राणप्रणेत्रे प्रणतोऽस्मि भक्त्या ॥ २ ॥

हृद्याच्छकीर्तिर्निरवद्यविद्या-
विद्योतितो दर्शितमुक्तिपद्यः ॥
सद्ध्यानतीर्थो मुनिमध्यमान्यो
हृद्याविरास्तां सततं प्रसन्नः ॥ ३ ॥

व्यासक्तचित्तान्वसुदेवपुत्रे
श्रीवासुदेवार्यपितॄन्प्रणम्य ॥
जीर्णालयोद्धारविधिं सुराणां
श्रीतन्त्रसारोक्तमहं प्रवक्ष्ये ॥ ४ ॥



श्रीमदनन्तो विजयतेतराम् ।

## अथ तंत्रसारसंग्रहानुसारि जीर्णोद्धार हवनपद्धतिः ।

अथ प्रयोगः । कर्ता कृतनित्यक्रियः प्राङमुखः आचम्य पवित्र पाणिः प्राणानायम्य श्रीहरिवायुस्मरणपूर्वकं सुमुखश्चेत्यादि देश-कालौ संकीर्त्य । भारतीरमणमुख्यप्राणांतर्गत श्रीविष्णुप्रेरणया-श्रीविष्णुप्रीत्यर्थ–तथा नृपराष्ट्रप्रजानां* सर्वेषां क्षेमाभ्युदयार्थंच–अस्याः प्रतिमायाः स्थानांतरं कर्तुं तंत्रसारोक्तप्रकारेण जीर्णोद्धारं करिष्ये । (ब्राह्मणद्वारा कारयिष्ये इति वा संकल्प्य)

तदंगभूतं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदिश्राद्धं ग्रहयज्ञं आचार्यादि ऋत्विग्वरणंच करिष्ये । इति संकल्प्य ।

नांदीश्राद्धांते आचार्यऋत्विगुपऋत्विजान् वृत्वा यथा विभवं मधुपर्कविधिना पूजयेत् . आचार्यः आदौ शुध्यर्थं तत्वन्यासमातृका न्यासांश्च कृत्वा । यदत्रेत्यादि गौरसर्षपान् विकीर्य । पंचगव्येन शुचीवो हव्या इति तृचेन एतोन्विद्रमिति तृचेन देवयजनं सपल्ल-वैर्दर्भमुष्टिना संप्रोक्ष्य । स्वस्त्ययनंतार्क्ष्य – अंहोमुचमितिमंत्रद्वय जपांते देवाः आयांतु यातुधानाः अपयांतु विष्णोदेव यजनं रक्षस्व भूमौ प्रादेशं कुर्यात् ।

### व्युत्क्रमजपक्रमः ।

संहारविधिना तत्र तत्वान् संहृत्य देशकः सहस्रं नारसिंहेन हुत्वा । तामुद्धरेत्पुनरित्युक्तं । तत्वमंत्रान् तत्वदेवतां मंत्रान् ।

---

* जीर्णोद्धार विधानंच नृपराष्ट्रहितावहम् । –निर्णयसिंधौ

तथा स्वकं तत्तन्मूर्तिमंत्रं। प्रतिलोम्येन व्युत्क्रमेण जप्त्वा। मूर्तौ प्रतिमायां हरिं संकोचयेत्। (इति तंत्रसार०टि०)

वामपादपंचांगुलिषु। १) ॐ पराय पृथिव्यात्मने शनैश्चरधराभ्यां नमः। २) ॐ पराय अबात्मने वरुणाय नमः। ३) ॐ पराय तेजात्मने वन्हये नमः। ४) ॐ पराय वाय्वात्मने प्रवहाय नमः। ५) ॐ पराय आकाशात्मने महागणपतये नमः।

दक्षिणपादपंचांगुलिषु। १) ॐ पराय गंधात्मने समानाय नमः। २) ॐ पराय रसात्मने उदानाय नमः। ३) ॐ पराय रूपात्मने व्यानाय नमः। ४) ॐ पराय स्पर्शात्मने अपानाय नमः। ५) ॐ पराय शब्दात्मने बृहस्पतिप्राणाभ्यां नमः।

वामहस्तपंचांगुलिषु। १) ॐ पराय उपस्थात्मने मनवे नमः। २) ॐ पराय पाय्वात्मने मित्राय नमः। ३) ॐ पराय पादात्मने जयंताय नमः। ४) ॐ पराय पाण्यात्मने दक्षाय नमः। ५) ॐ पराय वागात्मने वन्हये नमः।

दक्षिणहस्तपंचांगुलिषु। १) ॐ पराय घ्राणात्मने अश्विभ्यां नमः। २) ॐ पराय जिव्हात्मने वरुणाय नमः। ३) ॐ पराय चक्षुरात्मने सूर्याय नमः। ४) ॐ पराय त्वगात्मने प्राणाय नमः। ५) ॐ पराय श्रोत्रात्मने दिग्देवताभ्यो नमः।

वामोरौ। १) ॐ पराय मनआत्मने स्कंदेंद्राभ्यां नमः।

दक्षिणोरौ। २)ॐ पराय अहंकारात्मने गरुडशेषरुद्रेभ्यो नमः।

वामभुजे। ३) ॐ पराय महदात्मने ब्रह्मवायुभ्यां नमः।

दक्षिणभुजे। ४)ॐ पराय अव्यक्तात्मने ब्रह्माणीभारतीभ्यां नमः।

हृदये। ५) ॐ पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः।

मालाकारेण विन्यसेत् । १) ॐ पराय पुरुषात्मने श्री लक्ष्मी-नारायणाभ्यां नमः । २) ॐ पराय कालात्मने श्रीलक्ष्मी-नारायणाभ्यां नमः । ३) ॐ पराय मायात्मने श्रीलक्ष्मीनाराय-णाभ्यां नमः । ४) ॐ पराय नियत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ५) ॐ पराय सत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ६) ॐ पराय विद्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ७) ॐ पराय कलात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ८) ॐ पराय प्रवृत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ९) ॐ पराय स्फूर्त्या-त्मने श्रीलक्ष्मीनारायणाभ्यां नमः । १०) ॐ पराय संविदात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ११) ॐ पराय प्रतिष्ठात्मने श्री लक्ष्मीनारायणाभ्यां नमः । १२) ॐ पराय शक्त्यात्मने श्रीलक्ष्मी-नारायणाभ्यां नमः । अनंतरं । मूर्तिमंत्रं जप्त्वा* ।

ततो होमारंभः यागशालायां आचार्यः प्राङ्मुख उपविश्य । आचम्य पवित्र पाणिः प्राणानायम्य अद्यपूर्वोच्चरित० एवं गुण-विशेषण विशिष्टायां शुभतिथौ० भारतीरमणमुख्यप्राणांतर्गत श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं जीर्णोद्धारहवनांगभूतं (कुंडो) स्थंडिलोल्लेपनोल्लेखनादि सकलंकर्म करिष्ये ।

वाग्यतोभवेदित्यंते । कुंडे स्थंडिलेवा । ॐ स्वाहायै नमः स्वाहां । ॐ भारत्यै नमः भारतीं । इत्यावाह्य । ॐ श्रीं ॐ ऋतु स्नातां हरिणो रूपिणीं लक्ष्मीमनुसंधाय । स्वभर्तुः संस्थितामंके देवानां हव्यवाहनीं । रक्तवर्णां रक्तवस्त्रां ध्यायज्वलनसुंदरीं । इति स्वाहां ध्यात्वा ।

---

* तत्वमंत्र मूलमंत्रं तत्तन्मंत्राणां प्रतिलोम्येन जपमात्रं । न तु न्यासः ।

तत्रैव तदंतस्थां भारती। उद्यद्दिवाकरसमूहनिभां स्वभर्तु-रंकस्थितामभयसद्वरबाहुयुग्मां। मुद्रांच तत्वदर्शये वरपुस्तकंच दोर्युग्मकेन दधतीं स्मरतात्मविद्यां इति भारतीं ध्यात्वा।

लक्ष्मीं ध्यायेत् कौशेयरक्तवसनामरविंदनेत्रां पाशांकुशा-भयवरोद्यतपद्महस्तां। उद्यच्छतार्कसदृशीं परमांकसंस्थां ध्यायेद्विधी-शनुतपादयुगांजनित्रीं। ततस्तेजसेनेत्यादि० ओं भूर्भुवःस्वरों विष्णु-बोधात्मकं बलवर्धननामाग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य। पात्र अक्षतोदकं प्राश्य। प्रोक्षितेंधनचंदनतुलसीकाष्ठसुगंधद्रव्याणि च निक्षिप्य।

अद्येत्यादि० शुभतिथौ० जीर्णोद्धारहवनांगभूतं आदित्यादि-नवग्रहान्तर्गत मुख्यप्राणांतर्गत श्रीशिशुमारप्रीत्यर्थ नवग्रहस्थापन-पूजनंच करिष्ये। अग्नेरैशान्यांग्रहान् ग्रहकलशंच महीद्यौरित्यादि विधिना संस्थाप्य। तत्र वरुणं संपूज्य। कलशस्यमुखे विष्णुरि-त्याद्यैः संप्रार्थ्य।

ततोग्निसमीपमेत्य। अद्येत्यादि० शुभतिथौ० श्रीविष्णु-प्रीत्यर्थं अग्नेः षोडशसंस्कारसिध्यर्थं गर्भादानदिसंस्कारान् व्यस्त-समस्तव्याहृत्या १६ वारं आज्येन होष्ये। आज्यमुत्पूय। स्रुवं संमृज्य। भूरादिदेवताध्यानं कुर्यात्।

वासुदेवादिकाःशुक्लरक्तपीतसितोज्वलाः। चक्रशंखगदा-ब्जेतः प्रथमोमुंसलीहली। सशंखचक्रःस्त्वपरःस्तृतीयः शार्ङ्गबाण-वान्। सशंखचक्रस्तुर्यस्तु चक्रशंखासिचर्मवान्। इति ध्यात्वा। अग्नौ ध्यानं।

अग्निमंडलमध्यस्थं ध्यात्वा विष्णुं सनातनम्। पूजयित्वा श्रियायुक्तं जुहुयादाहुतिं ततः। संहर्ता सर्वदोषाणां अग्निस्थः सर्वदाहकः। नित्यानंदोग्निवर्णश्च रामः परशुभृत्सदा। इति ध्यात्वा।

संस्कारहोमं कुर्यात्। गर्भाधानादिषोडशसंस्कारार्थं व्याहृत्या आज्येन हृष्ये। स्रुवेणाज्यमादाय। ओं भूः स्वाहा अग्नये श्रीअनिरुद्धायेदं। ओं भुवः स्वाहा वायवे श्रीप्रद्युम्नायेदं। ओं स्वः स्वाहा सूर्याय श्रीसंकर्षणायेद। ओं भूर्भुवःस्व स्वाहा प्रजापतये श्रीवासुदेवायेदं। एवं पुंसवनादि प्रतिसंस्कारार्थं व्यस्तसमस्तव्याहृतिभिः आज्येन हुत्वा। पुनश्च प्रतिसंस्कारार्थं एकैकां पूर्णाहुतिं आज्येन जुहुयात्। एवं षोडशसंस्काराः पूर्णाहुतीश्च मिलित्वा अशीति संख्याकाः आज्याहुतयो भवंति।

अग्नौ पीठपूजा+। मध्ये ॐ परदेवतायै श्रीलक्ष्मीनृसिंहाय नमः। इत्यारभ्य–महापीठायते नमः। इत्यंतं पीठपूजां कृत्वा। अग्नौ श्रीपरशुराम आगच्छ एहिएहि। आवाहितोभव–स्थापितो भव–वरदोभव प्रसीद प्रसीद। अर्घ्यादिपुष्पांतैरुपचारैः पूजयित्वा आवरणपूजां कुर्यात्। मध्ये परमपुरुषाय नमः इत्यारभ्य–सत्यलोकाधिपतये ब्रह्मणे सभार्याय सवाहनाय सायुधाय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः। इत्यंतम्।

ततः धूपदीपौ दत्वा नैवेद्यं समर्प्य। अथ ध्यानं। अग्निमंडलमध्यस्थं चतुर्बाहुं किरीटिनं। भक्ताभीष्टप्रदातारं ध्यायेद्यज्ञ भुजं हरिं। चत्वारिश्शृंगेत्यस्य गोतमोवामदेवोऽग्निस्त्रिष्टुप्। अग्नि

---

+ पीठावरणपूजादि आन्हिकपद्धतौ द्रष्टव्यम्।

मूर्निध्याने विनियोगः। ॐ चत्वारिश्रृंगात्रयो अस्यपादा द्वेशीर्षे सप्तहस्तासो अस्य। त्रिधाबद्धो वृषभोरोरवीति महादेवो मर्त्या आविवेश। सप्तहस्तःश्चतुःश्रृंगो सप्तजिव्होद्विशीर्षकः। त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः। स्वाहांतु दक्षिणपार्श्वे देवीं वामे स्वधां तथा। बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नं स्रुच स्रुवम्। तोमरं व्यजनं वामैर्घृतपात्रंच धारयन्। मेषारूढो जटाबद्धो गौरवर्णो महौजसः। धूम्रध्वजो लोहिताक्षः सप्तार्चिः सर्वकामदः। आत्माभिमुखमासीन एवं रूपो हुताशनः।

तदंतस्थमुख्यप्राणध्यान। उद्यद्रविप्रकरसंनिभमच्युतांके स्वासीनमस्यनुतिनित्यवचःप्रवृत्ति। ध्यायेद्गदाभयकरं सुकृतांजलितं प्राणं यथष्ठ तनुमुन्नतकर्मशक्तिं।

तदंतस्थपरशुरामध्यानं। अंगारवर्णमभितोंऽबहिः प्रभाभिव्याप्तं परश्वधधनुर्धरमेकवीरम्। ध्यायेदजेशपुरूहूतमुखैस्तुवद्भिरावातमात्मपदवी प्रतिपादयंत। ॐ एषहि देवः प्रदिशोनु सर्वाः पूर्वोहि जातः सउगर्भे अंतः। सविजायमानः सजनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः। अग्नेवैश्वानरशांडिल्यगोत्र मेषध्वज मेषारूढ तदंतर्गत मुख्यप्राणांतर्गत यज्ञपुरुषात्मक हरिणीपति श्रीपरशुराम मम संमुखो वरदो भव। समिद्द्वयमादाय क्रियमाणे जीर्णोद्धारहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये। अस्मिन्नन्वाहितेग्नौ अग्नेः वैष्णवत्वसिध्यर्थं मूलमंत्रेण नारायणं अष्टवारम् पुरुषसूक्तेन महापुरुषं षोडशवारं द्वादशाक्षरेण वासुदेवं द्वादशवारं षडक्षरेण विष्णुं षड्वारं पुनर्व्याहृतिहोमः—तत्तद्देवतामंत्रेण होमः आज्यद्रव्येण यक्ष्ये।

जातवेदसमग्निमिध्मेन प्रजापतिं प्रजापतिंच आघारदेवते आज्येन अग्नोषोमौ चक्षुषी आज्येन। अत्र प्रधानं। आदित्यादि नवग्रहान् अमुकसंख्याभिः समिच्चर्वाज्याहुतिभिः अधिप्रत्यधिदेवताश्च पूर्वसंख्यातो न्यूनसंख्याभिः। क्रतुसाद्गुण्यदेवता क्रतुसंरक्षक देवताश्च उक्त संख्याभिः पीठदेवता सकृत्सकृत्। परशुरामं मूलमंत्रेण सकृदाज्येन गायत्र्या अष्टोत्तरशतवारं विष्णुगायत्र्या अष्टोत्तरशतवारं शिशुमारमंत्रेण शिशुमारं अष्टोत्तरशतवारं श्रीनृसिंहमंत्रेण नरसिंहं अयुतसंख्याभिः आज्येन आवरणदेवता सकृदाज्येन। शेषेण स्विष्टकृतमित्यादि। अन्वाधानं। रयिंन्नशतेस्वस्ति इत्यंते अग्नेः वैष्णवत्वसिद्धिहोमः कार्यः आत्मानंचालंकृत्य। हस्तं प्रक्षाल्य। संस्कृताज्येध्मयोः हविर्द्रव्याणांच नैवेद्यसमर्पणं कृत्वा— होमारंभः। ॐ नमो नारायणाय स्वाहा नारायणायेदं। अष्टवारं। ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशांगुलं स्वाहा। महापुरुषायेदं। यज्ञेन यज्ञमयजत० संति देवाः। पुरुषसूक्तेन प्रत्यृचं एकैकवार। ॐ नमो भगवते वासुदेवाय स्वाहा वासुदेवायेद। द्वादशवारम्। ॐ विष्णवे नमः स्वाहा विष्णवेदं षड्वारम्। एवं वैष्णवाग्निसिद्धिं विधाय। इध्मबंधन रज्जुमिध्मस्थाने निधायेत्यादि आज्यभागांतं कुर्यात्।

अथहोमक्रमः। आकृष्णेनेत्यादि नवग्रहहोमः। ॐ परदेवतायै श्रीलक्ष्मीनृसिंहाय स्वाहा इत्यारभ्य हरेर्योगपीठस्वरूपात्मने श्रीमदनंताय स्वाहा इत्यंतं पीठदेवताहोमः। ॐ भां भार्गवायनमः स्वाहा मूलमंत्रेण परशुरामं सकृद्धोमः। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो योनः प्रचोदयात्स्वाहा गायत्री होमः ॐ

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् स्वाहा । विष्णुगायत्रीहोमः प्रथमतो शिशुमारहोमः ॐ शि शिशुमाराय नमः स्वाहा शिशुमारहोमः। ॐ क्रूरं वीरं महाविष्णुं दीप्यंतं विश्वतोमुखं । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं स्वाहा । इति श्रीनृसिंहमंत्रहोमः। संनिधानार्थं व्याहृतिभिर्होमः व्याहृतिहो० मध्ये परमपुरुषाय स्वाहा इत्या भ्य ब्रह्मणे सभार्याय सवाहनाय सायुधाय सपरिग्रहाय श्रीविष्णुपार्षदाय नम स्वाहा इत्यंतम् । आवरणहोमः। शेषेण स्विष्टकृद्धोमः । इति होमक्रमः। अन्वाधानोक्तसंख्याप्रकारेण होमः कार्यः।

गणाधिपतये देया प्रथमातु वराहुतिः इति वचनानुसारेण वराहुतिपूर्वकं चतुर्गृहीतेन आज्येन आदौ गणपत्यंतर्गत विश्वनामक प्रीत्यर्थं होमं कुर्यात् । गणानांत्वा शौनको गृत्समदो गणपतिर्जगती । वराहुतिहोमे विनियोगः । ॐ गणानांत्वा गणपति हवामहे कविं कवीनामुपमश्रवस्तमं । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनं स्वाहा । गणपत्यतर्गत विश्वनामकायेदं इति त्यागः। यजमानः प्रत्याहुतित्यागस्य कर्तुं अशक्यत्वात् इमानि उपकल्पितानि हवनीयद्रव्याणि यायायक्ष्यमाणदेवताभ्यःस्ताभ्यः हुतानि होष्यमाणानिच मया सकृदेव परित्यक्तानि नमम । यथा दैवतमस्तु । ऋत्विजः क्रमेण होमं कुर्युः । प्रधानहोमसमाप्तौ– उपलिप्तरंगवल्याद्यलंकृतवेद्यां *

* उक्तेनैवविध नेन इत्युक्त्या पूर्वोक्तेन विधानेन प्रतिष्ठावत् कलशस्थापन विधिना चक्राब्जमंडले कलशान् संस्थाप्य केशवादिमूर्तिन् अजादिदेवानावाह्य ।

चक्राब्जमंडले २५ कलशस्थापनं कुर्यात् । तत्क्रमः । अद्य पूर्वोच्चरित०शुभतिथौ० श्रीविष्णुप्रीत्यर्थं जीर्णोद्धारांगभूतं कलश-स्थापनं करिष्ये । इति संकल्प्य । महीद्यौरितिमंत्रावृत्या । मध्ये परितः पूर्वादि चतुर्दिक्षुच भूमिं स्पृष्ट्वा । महीद्यौः काण्वो मेधा-तिथिर्भूमिर्गायत्री । भूमिस्पर्शने विनियोगः । ॐ महीद्यौः पृथिवी चन इमं यज्ञं मिमिक्षतां । पिपृतान्नोभरीमभिः । ओषधयः संवदंते इति तथैव तंडुलराशीन् कृत्वा । ओषधय आथर्वणोभिषगोषधयो-नुष्टुप् । धान्यराशिकरण विनियोगः । ॐ ओषधयः संवदते सोमेन सहराज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि । आकलशे-ष्विति मंत्रावृत्या । मध्ये पूर्वादि चतुर्दिक्षु कलशान् स्थापयेत् । आकलशेष्वसितः पवमानः सोमो गायत्री । ब्रह्मकलशस्थापने विनियोगः । ॐ आकलशेषु धावति पवित्रे परिषिच्यते । उक्थै-र्यज्ञेषु वर्धते । स्थापित मध्यकलशे । इमं मे गंगे सिंधुक्षित्प्रैयमेधो नद्यो जगती । शुद्धोदकपूरणे विनियोगः । ॐ इमं मे गंगे यमुने सरस्वति शुतुद्रिस्तोमं सचतापरुष्ण्या । असिक्न्यामरुद्वृध वितस्त-यार्जीकीये शृणुह्या सुषोमया । कलशचतुष्टये गंधोदकपूरणं । मंत्रावृत्या । गंधद्वारामिति चिक्लीतेंदिरानुष्टुप् । गंधोदकपूरणे विनियोगः । ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं ।

एवं चक्राब्जमंडलगतवीथिषु पूर्वादिचतुर्दिक्षु शुभ्ररंगवल्या लिखितचित्रपटे वा चतुर्दलयुतंपद्ममालिख्य । पूर्वादिचतुर्दिक्षुस्थित चतुर्दलपद्ममध्य एकं कलशं दलेष्वेकैकं । इति पूर्ववत् पंचकलशान् आकलशेष्विति मंत्रावृत्या स्थाप्य । पूर्वादिचतुर्दिक्षुस्थितकलशेषु

पंचामृतपूरणं । आप्यायस्वेतिगोतमः सोमो गायत्री । क्षीरपूरणे विनि० आप्यायस्वसमेतु ते विश्वतः सोमवृष्ण्यं । भवावाजस्य संगथे । मंत्रावृत्या कलशेषु क्षीरपूरणं । तथैव दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप् । दधिमेलने विनियोगः । ॐ दधिक्राव्णो अकारिषंजिष्णोरश्वस्यवाजिनः । सुरभिनो मुखाकरत्प्रण आयूंषितारिषत् । कलशेदधिपूरणम् । मधुवाता इति तृचस्यराहूगणो गोतमो विश्वेदेवा गायत्री । मधुपूरणे विनियोगः । ॐ मधुवाता ऋतायते मधुक्षरंति सिंधवः । माध्वीर्नः संत्वोषधीः । मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः । मधुद्यौरस्तुनः पिता । मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः । माध्वीर्गावोभवंतुनः । कलशेषु मधुपूरणम् । घृतमिमिक्षेत्यस्य आ।प्रियोतनूनपात्रिष्टुप । घृतपूरण विनियोगः । ॐ घृतंमिमिक्षे घृतमस्ययोनिर्घृतेश्रितो घृतम्वस्य धाम । अनुष्वधमावहमादयस्व स्वाहा कृतं वृषभवक्षिहव्यं । कलशेषु घृतपूरणम् । स्वादुःपवस्वेत्यस्य भार्गवो वेनः पवमान सोमस्त्रिष्टुप् । शर्कराक्षेपण विनियोगः । ॐ स्वादुः पवस्वदिव्यायजन्मने स्वादुरिंद्राय सुहवीतनाम्ने । स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमां अदाभ्यः । कलशेषु तथैवशर्कराक्षेपणम् । एवं पंचकलशेषु पचामृतं पूरयेत् ।

दक्षिणदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकं । आकलशेष्वितिमंत्रावृत्या स्थापयेत् । ओषधय इत्यस्य आथर्वणोभिषगोषधयोनुष्टुप् । वृक्षत्वङ्‌मिश्रोदकपूरणे विनियोगः । ओषधयः संवदंते सोमेन सहराज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि । इति मंत्रावृत्या कलशपंचके वृक्षत्वङ्‌मिश्रोदकपूरणम् ।

पश्चिमदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकं। इति कल-शोक्त मंत्रावृत्या पूर्ववत् पचकलशान् स्थापयेत्। कलशपंचके शुद्धोदकपूरणम्। इमं मे गंगे इति मंत्रेण पूरयेत्।

उत्तरदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकं पंचकलशान् मंत्रावृत्या संस्थाप्य गंधद्वारेति गधोदकेनापूर्य।

ब्रह्मशुद्धोदक कलशमध्ये पृथक् चतुर्दलं अल्पं रक्तं पद्मं कृत्वा तत्र पचगव्य पूर्णकलशं स्थापयेत्। तत्र क्रमः। तत्सवितु-रित्यस्य विश्वामित्रः सविता गायत्री। गोमूत्र प्रक्षपणे विनियोगः। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो योनः प्रचोदयात्। गंधद्वारेत्यस्य आनंदचिक्लीतेंदिरानुष्टुप्। गोमयप्रक्षेपणे विनि-योगः। गंधद्वारां० श्रियं। आप्यायस्वेत्यस्य गोतमः सोमो गायत्री। क्षीरप्रक्षेपणे विनियोगः। ॐ आप्यायस्व०गथे। दधि-क्राव्णो वामदेवो दधिक्रावानुष्टुप्। दधिप्रक्षेपणे विनियोगः। ॐ दधिक्राव्णो०षत्। घृतं मिमिक्षेत्यस्य गृत्समद आप्रियो तनूनपात्त्रिष्टुप्। घृतप्रक्षेपणे विनियोगः। ॐ घृतंमिमिक्षे०हव्यम्। इति कलशे पंचगव्यमापूर्य।

कलशानां परितः दिक्षु द्वेद्वे। विदिक्षु एकैकं। पूर्व-स्थापित पंचविंशतिकलशान् अन्यान् अवश्यकान् विशेषकलशान् स्थापयेत्। पूर्वे कुशोदकं पूर्ण कर्पूरमिश्रितोदकपूर्णमिति द्वौ। आग्नेये कुंकुमोदकपूर्ण एकं।

दक्षिणे चंदनोदकपूर्ण तुषारोदकपूर्णमिति द्वौ। नैर्ऋत्यां हरिद्राचूर्णमिश्रितोदकपूर्ण एकं।

पश्चिमे उशीरवासितोदकपूर्णं सर्षपमिलितोदकपूर्णमिति द्वौ । वायव्यकोणे नदीसंगमोदकपूर्णमेकं ।

उत्तरे । तडागोदकपूर्णं कूपोदकपूर्णमिति द्वौ । ऐशान्ये निर्झरोदकपूर्णमेकं । इंद्रेशानयोर्मध्ये एकं । एवं त्रयोदशकलशान् संस्थाप्य–

पूर्वस्थापित पंचविंशतिकलशेषु देवतावाहनं कुर्यात् । तत्र क्रमः । अद्येत्यादि० शुभतिथौ० भारतीरमण मुख्यप्राणांतर्गत श्रीलक्ष्मीनृसिंहप्रीत्यर्थं जीर्णोद्धारांगभूतं पचविंशतिकलशेषु देवता आवाहन करिष्ये । ब्रह्मकलशे मूलमत्रेण बुधवरुणांतर्यामि श्री लक्ष्मीनृसिंहाय नमः । श्रीलक्ष्मीनृसिंहं आवाहयामि ।

ब्रह्मकलशपरितः पूर्वे केशवाय नमः केशवं आवाहयामि । दक्षिणे नारायणाय नमः नारायणं आवाहयामि । पश्चिमे माधवाय नमः माधवं आवाहयामि । उत्तरे गोविंदाय नमः गोविंदं आवाहयामि । इत्यावाह्य ।

मंडलगतवीथिषु पूर्वदिक्स्थापित कलशपंचके मध्यकलशे विष्णवे नमः विष्णुं आवाहयामि । पूर्वे मधसूदनाय नमः मधसूदनं आवाहयामि । दक्षिणे त्रिविक्रमाय नमः त्रिविक्रमं आवाहयामि । पश्चिमे वामनाय नमः वामनं आवाहयामि । उत्तरे श्रीधराय नमः श्रीधरं आवाहयामि ।

मंडलगतवीथिषु दक्षिणदिग्गतकलशपंचके । मध्यकलशे हृषीकेशाय नमः हृषीकेशं आवाहयामि । पूर्वे पद्मनाभाय नमः पद्मनाभं आवाहयामि । दक्षिणे दामोदराय नमः दामोदरं आवाह-

यामि । पश्चिमे संकर्षणाय नमः संकर्षणं आवाहयामि । उत्तरे वासुदेवाय नमः वासुदेव आवाहयामि ।

मंडलगतवीथीषु पश्चिमदिग्गतकलशपंचके मध्यकलशे प्रद्युम्नाय नमः प्रद्युम्नं आवाहयामि । पूर्वे अनिरुद्धाय नमः अनिरुद्ध आवाहयामि । दक्षिणे पुरुषोत्तमाय नमः पुरुषोत्तमं आवाहयामि । पश्चिमे अधोक्षजाय नमः अधोक्षज आवाहयामि । उत्तरे नारसिंहाय नमः नारसिंहं आवाहयामि ।

उत्तरदिग्गत कलशपंचके । मध्यकलशे अच्युताय नमः अच्युत आवाहयामि । पूर्वे जनार्दनाय नमः जनार्दनं आवाहयामि । दक्षिणे उपेंद्राय नमः उपेंद्रं आवाहयामि । पश्चिमे हरये नमः हरिं आवाहयामि । उत्तरे श्रीकृष्णाय नमः श्रीकृष्णं आवाहयामि ।

एव देवताः आवाह्य । हस्तेन कलशान् स्पृष्ट्वा । मातृका मंत्रान् प्रणवादि मंत्रान् जप्त्वा । कलशान् सपूज्य । कलशदेवताभ्यो नमः इति आसनादि मत्रपुष्पांतं कृत्वा प्रार्थयेत् ।

कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बल । योग्यतां पापहानिंच पुण्यवृद्धिंच साधयेत् । सर्वक्षत्रमयोयस्मात् सर्वदेवमयोयतः । अतो हरिप्रियोसित्वं पूर्णकुंभ नमोस्तुते । इति प्रार्थ्य । अनेन कलशपूजनेन भगवान् बुधवरुणांतर्गत लक्ष्मीनारायणः प्रीयतां । मध्वांतर्गत श्रीकृष्णार्पणमस्तु ।

ततः । वेदघोषैःसह आदराद्भक्त्या प्रतिमां स्नानमंटपमानीय । प्रणवमंत्रेण आत्वाहार्षसूक्तेन घर्मसूक्तेन विष्णुसूक्त विश्वकर्मसूक्त पुरुषसूक्तांतैः विश्वतश्चक्षुरिति मंत्रेण । पृथक् पचगव्येन

स्नापयेत् । प्रणवस्य परब्रह्मऋषिः परमात्मा देवता । दैवी गायत्री च्छंदः । पंचगव्याभिषेके विनियोगः । ॐ इति प्रणवमन्त्रेण स्नापयेत् । आत्वाहार्षेति षळर्चं सूक्तं ध्रुवो राजा स्तुतिरनुष्टप् । पंचगव्या० आत्वाहार्ष० स्कृत् । घर्मा समन्तेति दशर्चं सूक्तं वैरूप सप्तध्रिस्तापसो वा धर्मो विश्वेदेवास्त्रिष्टुप् । चतुर्थी जगती । पंचगव्या०गः । धर्मासमंता०हितः । विष्णोर्नुकमिति षळर्चं सूक्तं दीर्घतमा विष्णुस्त्रिष्टुप् । पचगव्याभिषेके वि०गः । प्रव पांतमध सो०हुवं । भवा मित्र इति पचर्चं सूक्तं दार्घतमा विष्णुर्जगती । पचग०योगः । भवा मित्रो० भजत् । संवां कर्मणा इति अष्टर्चं सूक्तं भरद्वाज इंद्रा विष्णुस्त्रिष्टुप् । पचगव्याभिषेके वि० सवां कर्मणा० एथां परोमात्र येति सप्तर्चं सूक्तं वासिष्ठो विष्णुः पंचम्यादि तिसृणां इद्रा विष्णुस्त्रिष्टुप् । पचगव्या०योगः । परोमात्र० सदानः । नूमर्तो इति सप्तर्चं सूक्तं वासिष्ठो विष्णुस्त्रिष्टुप् । पच० योगः । नूमर्तोदयते० सदानः । यइमात सप्तर्चं सूक्तं भौवनो विश्वकर्मास्त्रिष्टुप् । द्वितीया विराट्रूपा । पचगव्या०गः । यइमाविश्वा० साधुकर्मा । चक्षुष इति सप्तर्चं सूक्तं विश्वकर्मा विश्वकर्मास्त्रिष्टुप् । पंच०योगः । चक्षुषः पिता० शासश्चरते । विश्वतश्चक्षुरितिमंत्रस्य भौवनो विश्वकर्मा विश्वकर्मास्त्रिष्टुप् । पंच०योगः । विश्वतश्चक्षु० एकः । सहस्रशीर्षेति षळर्चं सूक्तं नारायणः पुरुषोनुष्टुप् । अंत्यात्रिष्टुप् । पंचगव्याभिषेके विनियोगः । ॐ सहस्रशीर्षा पुरुषः० साध्याः संति देवाः । पुनः मूलमंत्रण प्रणवेन कुशोदकादि त्रयोदशकलशैः भक्तितः स्नापयित्वा ( गंधपुष्पादिभिः अलकृत्य ) ततः पंचविंशतिकलशैः बाह्यक्रमेण आत्वाहार्षे इत्यादि पूर्वोक्तमंत्रैः प्रतिमां अभिषेचयेत् ।

नध्य पचस्थित मध्य कलशाभिषेकं तु प्रणवेन अष्टाक्षरेण मूर्ति-मन्त्रेण पुरुषसूक्तेन चेत्यतैरेवमन्त्रैः कुर्यात् । नत्वाहार्षादिभिः । पचगव्यकलशपक्षे एवमेव । कलशग्रहणत्वित्थं कार्यम् । प्रथमं पूर्वदिक्स्थित कलशपचके आदौ प्राक्स्थितं ततो दक्षिणस्थं ततः पश्चिमस्थं तत उत्तरस्थं अनंतरं मध्यमस्थं । गृण्हीयात् । एव दक्षिणादि दिगवस्थित पचकेऽपि कलशग्रहण जानीयात् ।

इत्यादिना उक्त प्रकारेण हरिं स्नापयित्वा । उद्धृत्य गर्भ-गृहाद्बहिरानीय । गंधपुष्पादिभिः अलंकृत्य संपूज्य । प्रार्थयेत् ।

अस्य बिंबस्य चोत्थानं कर्तुमिच्छामि संप्रति ।
भवतो नोऽनुजानंतु भवदाज्ञां करोम्यहम् ।
देवदेव दयासिंधो देहिनां मुक्तिदायक ।
उद्धारणार्थं जीर्णानां अनुज्ञां देहि मे प्रभो ।

इति भगवत विज्ञाप्य क्षमाप्य प्रणमेत् । स्थलांतरे स्थापयेत् । इति शेषः ।

स्थापित देवतानां पूजां कृत्वा । शेषेण स्विष्टकृतं हुत्वा रज्जुप्रहरणादि प्रायश्चित्तहोमांते इंद्रादिलोकपालेभ्यः पलाशपर्णे-ष्वौदुंबरपर्णेषुवा सदीपमाषभक्तबलीन्दत्वा – आवाहितदेवताभ्यः क्षत्रपालायच सदीपमाषभक्त बलीन् यजमानद्वारा कारयेत् ।

ततः समुद्रादूर्मिरित्यादिमंत्रैः धामंतेत्यनया वा पूर्णाहुतिं हुत्वा - ऋद्धिकाम उक्तमंत्रैः वसोर्धारांच हुत्वा । पूर्णपात्रविमो-काग्न्युपस्थानादि कृत्वा ।

ततोऽग्नि संपूज्य। समृद्रज्येष्ठा० सुगास्त्वा इत्यादिना ग्रहकलशस्थोदकेन यजमानाभिषेचनं। मानस्तोकेतिभूतिश्च इति वचनात् विभूतिधारणादिकं शिष्टसांप्रदायानुसारेण कर्तव्यम्। आवाहितदेवताः यथाविभवं संपूज्य। उत्तिष्ठ ब्रह्मणस्पते देवयंत-स्त्वेमहे। उपप्रयंतु मरुतः सुदानव इंद्रप्राशूर्भवासचा। यांतु देव गणाः सर्वे इति विसृज्य। अग्नेः पश्चिमतः आचार्य संपूज्य। तस्मैगां वस्त्रयुगं द्विगुण दक्षिणां च दद्यात् अन्येभ्यो ऋत्विग्भ्यः यथाशक्ति दक्षिणां दद्यात्। तान् क्षमापयत। ततः यजमानेन श्रेयोग्रहणम् आचार्येण श्रेयोदानंच कारयेत। मुख्यदेवतापीठं ग्रह पीठादिकंच आचार्यहस्ते प्रतिपाद्य। आदित्यादि नवग्रहप्रीत्यर्थ तत्तद्ग्रहधान्यानिच नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दास्ये इति संकल्प्य भूयसीं दक्षिणां दद्यात्। यस्यस्मृत्येति कर्मफलं ईश्वरापण कुर्यात्। यस्यस्मृत्याच नामोक्त्या तपोहोमक्रियादिषु। न्यूनं संपूर्णतां याति सद्यो वदे तमच्युतं। मंत्रहीनं क्रियाहीनं भक्तिहीनं रमापते। यत्कृतंतु मयादेव परिपूर्ण तदस्तु मे। अनेन ज र्णोद्धार होमेन भगवान् यज्ञपुरुषात्मक हरिणीपति श्रीपरशुरामः प्रीयतां प्रीतो भवतु। मध्वांतर्गत श्रीकृष्णार्पणमस्तु। गच्छगच्छ इत्यग्नि विसृज्य। कर्मांते द्विराचामेत्। कर्मसांगतासिध्यर्थ यथाशक्ति ब्राह्मणान् भोजयित्वा। तैराशिषो गृण्हीयात्। इति जीर्णोद्धार हवनपद्धतिः।

कृतस्य कर्मणः भगवति समर्पणं।

अक्षयं कर्म यस्मिन् परे स्वर्पितं प्रक्षयं यांति दुःखानि यन्ना-मतः। अक्षरो योजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाऽजा-देकम्। प्रीणयामो वासुदेवं देवतामंडला खंडमंडनम।

तपस्विनो दानपरा यशस्विनो मनस्विनो मंत्रविदः सुमंगलाः। क्षेमंनविंदंति विनायदर्पणं तस्मै सुभद्रश्रवसे नमोनमः।

कायेनवाचामनसेंद्रियैर्वा बुध्यात्मनावाऽनुसृतःस्वभावं। करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत्।

प्रमादात्कुर्वतांकर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णस्यादितिश्रुतिः प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरण परं। इत्यादि प्रमाणार्थं अनुसंधाय हरिस्मरणपूर्वकं हर्यर्पितानि कर्माणि सफलानि भवंतीत्यशेषमतिमंगलम्।

उत्तिष्ठ ब्रह्मणस्पते० यांतु देवेतिच विसृज्य।

## अथ कलाकर्षण श्लोकः।

अथवा एकादिमासक्रमेण कुंभादौ कर्षणं कुर्यात्। तदुक्तम्। मासमेकं तु कुंभे स्यात् द्विमासं खड्ग एवच। मासत्रये तु कूर्चेवै षण्मासं दर्पणेऽपि वा। नवमासं पदे कुर्या वत्सरादौच दारुजे इति। कुंभपक्षे तज्जले दहनशोषणप्लवनादिकंच कुर्यात्।

इति संक्षिप्तकलाकर्षणम्।

## जीर्णोद्धारे तंत्रसारसंग्रह मूलश्लोकौ।

जीर्णालयोद्धृतौ चैव तत्वमंत्रान् स्वकं तथा।
प्रतिलोम्येन जप्त्वैवमूर्तौ संकोचयेद्धरिम् ।१।

उक्तेनैवविधानेन तदर्धविभवैः सुधीः।
पादमात्रैरपि हरिं स्नापयित्वा यथोदितं ।२।

पूर्वोक्तेन विधानेन कलशस्थापन मूर्त्यावाहन पूजाभिषेक-मंत्रादिविधिना इत्यर्थः । (छलारी टिप्पणी)

**उपसंहार श्लोकौ ।**

भक्तोद्धारकरानंतप्रीत्यै स्यात्सज्जनादृतः ।
जीर्णोद्धारविधिग्रंथस्तंत्रसारोद्धृतो मम ।

अवाप्तजन्मा बुरलीकुलेऽच्छे
पदाब्जभक्तो मुरलीधरस्य ।
श्रीराघवेंद्रो हरिलीनचेताः
प्रावोच दार्यादरलिप्सयैतम्

इति जीर्णोद्धारप्रयोग समाप्तः ।

श्रीशरशरणम् ।

## मंगलाचरणश्लोकाः ।

अनन्तहस्तैर्भजतां जनानां
वरान्ददानो भगवाननन्तः ॥
निरन्तरायान्सदयान्तरङ्गो
निरन्तरायान्मम संतनोतु ॥ १ ॥

समुद्रतरणे पटुर्भवसमुद्रसंतारकः
प्रसन्नमुखमुद्रया स्फुटदयासमुद्रिक्तधीः ॥
तनोतु हनुमान्पुरा सदनुमानतीर्थः कलौ
हरौ रतमनास्स मे हितमनारतं मारुतिः ॥ २ ॥

वैराग्यमूर्तिर्विहितेष्टपूर्ति-
र्निरस्तविद्वज्जनचित्तजूर्तिः ॥
स्फूर्तिप्रदाक्रान्तदिगन्तकीर्ति-
स्सद्ध्यानतीर्थो हरताद्भवार्तिम् ॥ ३ ॥

वेदादिविद्यासु विशारदानां
श्रीवासुदेवार्यसुधीपितॄणाम् ॥
तथा सतां वाङ्मयरूपसेवां
कर्तुं ममैतत्सुकृतौ प्रवृत्तिः ॥ ४ ॥



श्रीमदनंतो विजयतेतराम् ।

# श्रीमत्तंत्रसारानुसारि संप्रोक्षणप्रयोगः ।

यजमानः स्नात्वा नित्यकर्म निर्वर्त्य । आचम्य पवित्रपाणिः प्राणानायम्य श्रीहरिवायुस्मरणपूर्वकं सुमुखश्चेत्यादि देशकालौ संकीर्त्य ।

भारतीरमण मुख्यप्राणांतर्गत श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं अस्यां प्रतिमायां चोर*चांडालपतितादि प्रवेश स्पृष्टाऽस्पृष्ट जनित सर्वदोषपरिहारार्थं तथा मूर्तौ पूर्णकला सनिधानसिध्यर्थं तंत्रसारोक्त संप्रोक्षणं करिष्ये ।

इति संकल्प्य । तदंगभूतं स्वस्तिपुण्याहवाचनं गणपतिपूजनं वरुणपूजनंच करिष्ये स्वस्तिवाचनं समाप्य । ततः आचार्यं ऋत्विजो वृत्वा । यथा विभवं मधुपर्कविधिना पूजयेत् ।

ततः यजनदेशे यजमानेन प्रार्थितोऽहं आचार्यकर्म करिष्ये । यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु । अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं । सर्वेषामविरोधेन पौष्टिकर्मसमारभे । अनेन मंत्रेण गौरसर्षपान् विकिरेत् ।

पंचगव्येन शुचीवो हव्या इति तृचेन पुनंतुमादेवजना इति तृचेन एतोन्विद्रमिति तृचेन पल्लवदूर्वाभिः दर्भमुष्टिनाच यजन-

---

* चोरचांडालपतितश्वोदक्यादि प्रवेशने । शवाद्युपहतौ चैव पूजाविच्छेदने तथा । स्नपनोक्तेनमार्गेण प्रायश्चित्तविधि स्मृतः । तंत्रसारसंग्रहे ।

देशं गर्भालयंच संप्रोक्ष्य। स्वस्त्ययनंतार्क्ष्यमित्यादि प्रादेशकरणांतं कुर्यात्।

ततः संप्रोक्षणांगभूतं पंचविंशतिकलशान् स्थापयेत्। अद्य-त्यादि० शुभतिथौ० भारतीरमण मुख्यप्राणांतर्गत श्रीविष्णुप्रीत्यर्थं प्रतिमायाः अभिषेकार्थं कलशस्थापनं करिष्ये।

महीद्यौः काण्वो मेधातिथिर्भूमिर्गायत्री। भूमिस्पर्शने विनि० ॐ महीद्यौः पृथिवीचन०मभिः। ततः चक्राब्जं स्थापयित्वा। तदुपरि–

ओषधय इत्यस्याथर्वणो भिषगोषधयोनुष्टुप्। धान्यप्रक्षेपणे विनियोगः। ॐ ओषधयः संवदंते० मसि। तत्र मध्ये। आकल-शेष्वशितः पवमानः सोमो गायत्री। ब्रह्मकलशस्थापने विनियोगः। ॐ आकलशेषु धावति०वर्धते। तत्परितः चतुर्दिक्षु चतुःकलशान्। आकलशेष्विति मंत्रावृत्या संस्थाप्य। मध्यकलशे। इमं मे गंग इति सिंधुक्षित्प्रय्यमेधो नद्यो जगती। शुद्धोदकपूरणे विनियोगः। ॐ इमं मे गंगे यमुनेसरस्वति० मया। कलशचतुष्टये। गंधद्वारामिति आनंदकर्दमचिक्लीतेंदिरासुता ऋषयः। श्रीर्देवता। अनुष्टुप् छंदः। गंधोदकपूरणे विनियोगः। ॐ गंधद्वारां दुराधर्षां० श्रियं।

मंडलगतवीथिषु पूर्वादि चतुर्दिक्षु शुभ्ररंगवल्या चतुर्दलयुतं पद्ममालिख्य। पूर्वस्थित पद्मदलमध्ये एकं कलशं दलेष्वेकैकं च इति पंचकलशान् आकलशेष्विति मंत्रावृत्या संस्थाप्य। आप्याय-स्वेति गोतमः सोमो गायत्री। क्षीरपूरणे विनियोगः। ॐ आप्या-यस्व समेतुते०गथे। दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप्। दधि-

मेळने वि० । ॐ दधिक्राव्णो अकारिषं० षितारिषत् । घृतं मिमिक्षे इत्यस्य गृत्समद आप्रियो तनूनपात्रिष्टुप् । घृतमेलने वि० । ॐ घृतं मिमिक्षे घृतमस्य हृव्यं । मधुवाता इत्यस्य राहूगणो गौतमो विश्वेदेवा गायत्री । मधुमेलने वि० । ॐ मधुवाता ऋतायते० गावो भवंतुनः । स्वादुः पवस्वेत्यस्य भार्गवो वेनः पवमानः सोमस्त्रिष्टुप् । शर्करामेळने वि०। ॐ स्वादुः पवस्वदिव्याय० अदाभ्यः । पंचकलशेषु पंचामृतं पूरयेत् ।

मंडलदक्षिणदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकंच आकलशेष्विति मंत्रावृत्या स्थापयेत् । ओषधय इत्यस्य० अनुष्टुप् । वृक्षत्वङ्मिश्रोदकपूरणे वि० । ॐ ओषधय संवदंते० पारयामसि । कलशपंचके त्वङ्मिश्रोदकपूरणम् ।

मंडलपश्चिमदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकंच इति पंचकलशान् पूर्ववत् स्थापयेत् । कलशपचके शुद्धोदकपूरणम् । इमं मे गंगे इति मंत्रेण ।

मंडलउत्तरदिग्गतचतुर्दलपद्ममध्ये एकं दलेष्वेकैकंच इति पंचकलशान् आकलशेष्विति मंत्रावृत्या संस्थाप्य गंधद्वारेति कलशपंचकं गंधोदकेनापूर्य ।

ब्रह्मशुद्धोदक कलशमध्ये पृथक् चतुर्दलं अल्पं रक्तं पद्मं कृत्वा । तत्र पंचगव्य पूर्णकलशं स्थापयेत् । तत्र मंडले कलशानां परितः दिक्षु द्वेद्वे विदिक्षु एकैकं इति अंकुरार्पणपात्राणि संस्थाप्य । पूर्वस्थापित पंचविंशति कलशेभ्यः अन्यान् आवश्यकान् विशेष कलशान् पालिकादि क्रमेण स्थापयेत् । पूर्वे कुशोदकपूर्ण कर्पूरमिश्रितोदकपूर्णमिति द्वौ । आग्नेये कुंकुमोदकपूर्ण एकं ।

दक्षिणे चंदनोदकपूर्ण तुषारोदकपूर्णमिति द्वौ। नैर्ऋत्यां हरिद्रादकपूर्णमेकं। पश्चिमे उशीरवासितोदकपूर्णं कोष्ठसर्षप मिश्रितादकपूर्णमिति द्वौ। वायव्यकोणे नदीसंगमोदकपूर्णमेकं। उत्तरे तडागोदकपूर्ण कूपोदकपूर्णमिति द्वौ। ईशान्ये निर्झरोदक-पूर्णमेकं। इंद्रेशानयोर्मध्ये एकं।

एवं त्रयोदशकलशान् संस्थाप्य। पूर्वस्थापित पंचविंशति कलशेषु देवतावाहनं कुर्यात्। तत्र क्रमः। अद्यपूर्वोच्चरित शुभ-तिथौ० श्रीविष्णुप्रीत्यर्थं पंचविंशतिकलशेषु देवतावाहनं करिष्ये।

ब्रह्मकलशे मूलमंत्रेण बुधवरुणांतर्यामि मूलमूर्तये श्रीलक्ष्मी-नारायणाय नमः। श्रीलक्ष्मीनारायणं आवाहयामि। पूर्वे ब्रह्मकलश परितः। केशवाय नमः। केशवं आवाहयामि। दक्षिणकलशे नारा-यणाय नमः। नारायणं आ०। पश्चिमकलशे माधवाय नमः। माधवं आ०। उत्तरकलशे गोविंदाय नमः। गोविंदं आवाहयामि। इत्यावाह्य।

मंडलगतवीथिषु पूर्वदिक्स्थापित कलशपंचके मध्यकलशे विष्णवे नमः विष्णुं आवा०। पूर्वे मधुसूदनाय नमः मधुसूदनं आ०। दक्षिणे त्रिविक्रमाय नमः त्रिविक्रमं आ०। पश्चिमे वाम-नाय नमः वामनं आ०। उत्तरे श्रीधराय नमः श्रीधरं आवाह-यामि। इत्यावाह्य।

दक्षिणदिग्गतकलशपंचके। मध्यकलशे। हृषीकेशाय नमः हृषीकेशं आवा०। पूर्वे पद्मनाभाय नमः पद्मनाभं आ०। दक्षिणे दामोदराय नमः दामोदरं आ०। पश्चिमे संकर्षणाय नमः संकर्षणं आ०। उत्तरे वासुदेवाय नमः वासुदेवं आ०। इत्यावाह्य।

पश्चिमदिग्गतकलशपंचके मध्यकलशे । प्रद्युम्नाय नमः प्रद्युम्नं आ० । पूर्वे अनिरुद्धाय नमः अनिरुद्धं आ० । दक्षिणे पुरुषोत्तमाय नमः पुरुषोत्तमं आ० । पश्चिमे अधोक्षजाय नमः अधोक्षजं आ० । उत्तरे नारसिंहाय नमः नारसिंहं आ० । इत्यावाह्य ।

उत्तरदिग्गतकलशपंचके मध्यकलशे । अच्युताय नमः अच्युतं आ० । पूर्वे जनार्दनाय नमः जनार्दनं आ० । दक्षिणे उपेंद्राय नमः उपेंद्रं आ० । पश्चिमे हरये नमः हरिं आ० । उत्तरे श्रीकृष्णाय नमः श्रीकृष्णं आ० । एवं देवता आवाह्य ।

हस्तेन कलशान् स्पृष्ट्वा । मातृकामंत्रान् प्रणवादिमंत्रान् जपित्वा । कलशान् संपूज्य । कलशदेवताभ्यो नमः इत्यासनादि० मंत्रपुष्पांतं । कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलं । योग्यतां पापहानिंच पुण्यवृद्धिंच साधयेत् । सर्वक्षेत्रमयोयस्मात्सर्वदेवमयो यतः । अतो हरिप्रियोसित्वं पूर्णकुंभ नमोस्तुते । इति प्रार्थ्य । अनेन कलशपूजनेन भगवान् श्रीलक्ष्मीनारायणः प्रीयतां ।

ततः वेदघोष पंचविधवाद्यघोषैःसह आदराद्भक्त्या प्रतिमां प्रणवमंत्रेण आत्वाहार्षसूक्तेन घर्मसूक्त विष्णुसूक्त विश्वकर्मसूक्त पुरुषसूक्तांतैः विश्वतश्चक्षुरितिमंत्रेण । पृथक् पचगव्येन स्नापयित्वा । प्रणवस्य परब्रह्मऋषिः परमात्मा देवता । दैवी गायत्री छंदः । पंचगव्याभिषेके विनियोगः । आत्वाहार्षेतिसूक्तं ध्रुवोराज स्तुतिरनुष्टुप् । पंचगव्याभिषेके वि० ॐ आत्वाहार्षं० स्करत् । घर्मासमंतेति दशर्चसूक्तं वैरूपं साध्रिस्तापसो वा घर्मो विश्वेदेवास्त्रिष्टुप् । पंचगव्याभि० ॐ घर्मासमंता० हितः । विष्णोर्नुकमिति

षळर्चंसूक्तं दीर्घतमा विष्णुस्त्रिष्टुप् । पंचगव्या० ॐ विष्णोर्नुकं० भातिभूरि । प्रव:पांतमिति षळर्च सूक्तं दीर्घतमा आद्यायाः विष्णुः द्वितीयायाः इंद्राविष्णू ततश्चतसृणां विष्णुर्जगती । पंचग० वि० । ॐ प्रव:पांतमंधसो० हवं ।

भवा मित्र इति पंचर्चं सूक्तं दीर्घतमा विष्णुर्जगती । पंचगव्या० ॐ भवामित्रो० भजत् । संवां कर्मणा इति अष्टर्चं सूक्तं भारद्वाजइंद्राविष्णूस्त्रिष्टुप् । पंचगव्या० ॐ संवां कर्मणा० येथां । परोमात्रयेति सप्तर्च सूक्तं वसिष्ठो विष्णुः पंचम्यादि तिसृणां इंद्राविष्णूस्त्रिष्टुप् । ॐ परोमात्रया० स्वस्तिभि: सदानः ।

नूमर्तइति सप्तर्च सूक्तं वसिष्ठो विष्णुस्त्रिष्टुप् । पंचगव्या० ॐ नूमर्तोदयते० स्वस्तिभि: सदानः । भौवनो विश्वकर्मा विश्वकर्मास्त्रिष्टुप् । ॐ यइमाविश्वा० साधुकर्मा । चक्षुषइति सप्तर्चं सूक्तं विश्वकर्मा विश्वकर्मास्त्रिष्टुप् । ॐ चक्षुषः पिता० शासश्चरंति ।

सहस्रशीर्षेति षोळशर्चं सूक्तं नारायणः पुरुषोनुष्टुप् । अंत्यास्त्रिष्टुप् । पंचगव्याभिषेके विनियोगः । ॐ सहस्रशीर्षा० साध्याः संति देवाः । विश्वतश्चक्षुरितिमंत्रस्य भौवनो विश्वकर्मा विश्वकर्मास्त्रिष्टुप् । पंचगव्या० ॐ विश्वतश्चक्षु० एकः । पुनः मूलमंत्रेण प्रणवेन कुशोदकादि त्रयोदशकलशैः भक्तितः स्नापयित्वा । ततः हस्तेन प्रतिमां स्पृष्ट्वा । अष्टोत्तरशतं अष्टाक्षरमंत्रं अष्टोत्तरशतं तत्तन्मूर्तिमंत्रंच जप्त्वा । प्रतिमायां मातृकान्यास तत्वन्यासांश्च कृत्वा । ध्यानश्लोकं पठित्वा । अष्टोत्तरसन्निधानजपं

कुर्यात् । ततः आत्वाहार्षादि० पुरुषसूक्तांतं जप्त्वा । ततः पंच-विंशतिकलशैः बाह्यक्रमेण आत्वाहार्षेत्यादि पूर्वोक्तमंत्रैः प्रतिमा अभिषिंचेत् ।

मध्यम पंचस्थित मध्यकलशाभिषेकंतु प्रणवेन अष्टाक्षरेण मूर्तिमंत्रेण पुरुषसूक्तेनच इत्येतैरेव मंत्रैः कुर्यात् । नत्वाहार्षादिभिः । पंचगव्यकलशपक्षे एवमेव । कलशग्रहणंत्वित्थं कार्य ।

प्रथमं पूर्वदिक्स्थितकलशपंचके आदौ प्राक्स्थितं ततो दक्षिणस्थं । ततः पश्चिमस्थं तत उत्तरस्थं अनंतरं मध्यमस्थं गृण्हीयात् । एवं दक्षिणादि दिगवस्थित पंचकेपि कलशग्रहणं जानीयात्। अभिषेकानंतरं । आत्वाहार्षादि पूर्वोक्तमंत्रान् पुनः पठित्वा । ततः बीजमंत्रेणाभिमृश्य ।

ॐ ह्रीं क्रौं यं क्रं ह्रं तं इति मंत्रेण । ततः तंत्रसारोक्त पूजाविधानेन गंधपुष्पतुलसीधूपदीपनैवेद्यतांबूल पुनर्धूपनीराजन मंत्रपुष्पांजलि सर्वराजोपचारांताः पूजां कुर्यात् ।

ततः आचार्यः कुंडात् स्थंडिलाद्वा पश्चिमतः उपविश्य । आचम्य प्राणानायम्य अद्येत्यादि शुभतिथौ भारतीरमण मुख्य० श्रीविष्णुप्रीत्यर्थं संप्रोक्षणहवनांगभूतं (कुंडो) स्थंडिलोल्लेपनोल्लेखनाद्यग्निप्रतिष्ठापनंच करिष्ये । तद्गोमयेनेत्यादि० वाग्यतोभवेदित्यंते । कुंडे स्थंडिलेवा । ॐ स्वाहायै नमः स्वाहां आवाहयामि । ॐ भारत्यै नमः भारतीं आवा० । ॐ श्रीं ॐ ऋतुस्नातां हरिणीरूपिणीं लक्ष्मीं अनुसंधाय ।

स्वभर्तुः संस्थितामंके देवानां हव्यवाहिनीं। रक्तवर्णां रक्तवस्त्रां ध्यायज्वलनसुंदरीं। इति स्वाहां ध्यात्वा। तत्रैव तदंतस्थां भारतीं। उद्यद्दिवाकरसमूहनिभां स्वभर्तुरंकस्थितामभयसद्वरबाहुयुग्मां। मुद्रांच तत्वदृशये वरपुस्तकंच दोर्युग्मकेन दधतीं स्मरतात्मविद्यां। इति भारतीं ध्यात्वा।

लक्ष्मीं ध्यायेत्। कौशेयरक्तवसनां अरविंदनेत्रां पाशांकुशाभयवरोद्यतपद्महस्तां। उद्यच्छतार्कसदृशीं परमांकसंस्थां ध्यायेद्विधाशनुतपादयुगां जनित्रीं। इति लक्ष्मीं ध्यात्वा।

ततस्तैजसेनासंभवे मृण्मयेनवा इत्यादि० अग्निप्रतिष्ठापने विनियोगः। ॐ भूर्भुवःस्वरों विष्णुवीर्यात्मकं बलवर्धननामाग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य। पात्रे अक्षतोदकं प्राश्य। प्रोक्षितेंधनचंदनतुलसीकाष्ठसुगंधद्रव्याणिच निक्षिप्य।

वेणुधमन्या प्रबोध्य ध्यायेत्। अग्निं प्रज्वलितं वंदे जातवेदं हुताशनं। सुवर्णवर्णमनलं समिद्धं विश्वतोमुखं। कुंडमध्ये स्थितां लक्ष्मीं सर्वाभरणभूषितां। सर्वाऽवयवसंपूर्णां ऋतुस्नातां विचिंतयेत्। देवं नारायणं ध्यात्वा सर्वलक्षणलक्षितं। चतुर्बाहुं विशालाक्षं कोमलं पीतवाससम्। इति ध्यात्वा।

अद्येत्यादि शुभतिथौ भारतीरमण मुख्यप्राणांतर्गत श्रीविष्णुप्रीत्यर्थं। अग्नेः गर्भाधानादि षोडशसंस्कारसिध्यर्थं। व्यस्तसमस्त व्याहृतिभिः षोडशवारं– पुनश्च प्रतिसंस्कारार्थं एकैकवारं पूर्णाहुत्यर्थं आज्याहुतीर्होष्ये। आज्यमुत्पूय–स्रुवं समृज्य–इत्यादि तंत्रं स्थालीपाकवत् कुर्यात्। ततः भूरादिदेवताध्यानं।

वासुदेवादिकाः शुक्लरक्तपीतसितोज्वलाः। चक्रशंखगदाब्जेत प्रथमो मुसलीहली। सशंखचक्रस्त्वपरःस्तृतीयः शार्ङ्‌बाणवान्। सशंखचक्रस्तुर्यस्तु चक्रशंखासि चर्मवान्। इति ध्यात्वा।

संस्कारहोमं कुर्यात्। स्रुवेणाज्यमादाय। ॐ भूः स्वाहा अग्नये श्री अनिरुद्धायेदं। ॐ भुवः स्वाहा वायवे श्रीप्रद्युम्नायेदं। ॐ स्वः स्वाहा सूर्याय श्रीसंकर्षणायेदं ॐ भूर्भुवःस्वः स्वाहा प्रजापतये श्रीवासुदेवायेदं। सांगतासिध्यर्थं पूर्णाहुतीर्होष्ये ॐ भूर्भुवःस्वः स्वाहा प्रजापतये श्रीवासुदेवायेदं।

एवं अवशिष्ट पुंसवनादि० विवाहांताः षोडशसंस्कारान् कुर्यात्। ततः अग्नेः वैष्णवत्वसिध्यर्थं विष्ण्वाहुतीराज्येन होष्ये। अष्टौ अष्टाक्षरेणैव पुंसूक्तेनच षोडश। द्विषट्षडक्षरेणैव विष्ण्वाहुतिरनुक्रमात्। इति वचनात् क्रमेण वैष्णवत्वसिद्धिहोमं कुर्यात्।

ततः अग्नौ पीठपूजां विधाय। ॐ परदेवतायै श्रीलक्ष्मी नारायणाय नमः आरभ्य महापीठायते नमः इत्यंतं पीठपूजां कृत्वा। परशुराममावाह्य। अर्घ्यादि० पुष्प पूजांते। आवरणपूजा कार्या। ॐ परमपुरुषाय नमः आरभ्य सत्यलोकाधिपतये ब्रह्मणे सभार्याय सवाहनाय सायुधाय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः इत्यावरण पूजा।

ततः चत्वारिश्रृंगेत्यस्य गोतमो वामदेवोऽग्निस्त्रिष्टुप्। अग्निमूर्तिध्याने विनियोगः। ॐ चत्वारिश्रृंगा त्रयो अस्यपादा० आविवेश। स्मृतिमंत्रांश्च। सप्तहस्तःश्चतुःश्रृगः० हुताशनः। तदंतस्थं मुख्यप्राणध्यानं। उद्यदद्रविप्रकरसन्निभमच्युतांके स्वासीन

मस्य नुतिनित्यवचः प्रवृत्ति । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्ति ।

तदंतस्थां लक्ष्मी । कौशेयरक्तवसनां० जनित्रीं । तदंतस्थं अंगारवर्णमभितोंडबहिः प्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरं । ध्यायेदजेशपुरूहूतमुखैस्तुवद्भिरावीतमात्मपदवीं प्रतिपादयतं ।

ॐ एषहि देवः प्रदिशोनु सर्वाः पूर्वोहि जातः सउगर्भे अंतः । सविजायमानः सजनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः । अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वज मेषारूढ वरप्रद प्राङ्मुखो देव अग्न्यंतर्गत मुख्यप्राणांतर्गत यज्ञपुरुषात्मक हरिणीपति श्री परशुराम मम संमुखो वरदो भव ।

अन्वाधानं । समिद्वयमादाय क्रियमाणे सप्रोक्षणहोमे देवता परिग्रहार्थमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेग्नौ जातवेद समग्नि-मिध्मेन प्रजापतिं प्रजापतिंच आघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन ।

अत्र प्रधानं । नवग्रहकरणपक्षे आदित्यादि नवग्रहान् समि-त्तिला (चर्वा)ज्याहुतिभिः इष्टसंख्याहुतिभिः । अधिप्रत्यधिदेव-ताश्च न्यूनसंख्याभिः पूर्वोक्ताहुतिभिः । क्रतुसाद्गुण्यदेवता क्रतु-संरक्षकदेवताश्च न्यूनसंख्याहुतिभिः तदाहुतिभिः ।

२५ तत्वदेवताः तत्तन्मंत्रेण प्रत्येकं शतसंख्याभिः आज्या-हुतिभिः यथाशक्ति वा आहुतिभिः । पुरुषसूक्तेन प्रत्यर्चं एकैका-हुत्या आज्यद्रव्यैः । गायत्र्या शतसंख्याभिः आज्याहुतिभिः । तत्त-न्मूर्तिं मूलमंत्रेण अष्टोत्तरसहस्रसंख्याभिः आज्याहुतिभिः । पीठ-

देवतां प्रत्येकमेकैकं आज्याहुत्या विष्णुं विष्णुगायत्र्या अयुत संख्याभिः १०००० आज्याहुतिभिः। द्वारपालकदेवताः एकैकया ज्याहुत्या इंद्रादिलोकपालदेवताः एकैकया आवरणदेवताः एकैका- ज्याहुतिभिः शेषेण स्विष्टकृतमित्यादि सद्यो यक्ष्ये इत्यंतमुक्त्वा।

अन्वाधाय परिसमूहनाद्याज्यभागांतं कृत्वा। अन्वाधान क्रमेण प्रतिदेवता उद्दिश्य त्यागं कुर्यात्। आचार्यः आदौ चतुर्गृहो- तेनाज्येन वराहुतिपूर्वकं होमं कुर्यात्। गणानांत्वा शौनको गृत्समदो गणपतिर्जगती। गणपत्यंतर्गत विश्वाभिन्न श्रीविष्णुप्रीत्यर्थे वरा- हुतिहोमे विनियोगः। ॐ गणानांत्वा० सादनं स्वाहा। गणपत्यंत- र्गत विश्वाभिन्न श्रीविष्णव इदं नमम। इति

यजमानः त्यागं कुर्यात्। प्रत्याहुति त्यागस्य कर्तुं अशक्य- त्वात् इमानि उपकल्पितानि हवनीय द्रव्याणि याया यक्ष्यमाण देवताः ताभ्यस्ताभ्यः हुतानि होष्यमाणानिच मया सकृदेव परि- त्यक्तानि नममेत्यक्षतजलमुत्सृजेत् यथादैवतमस्तु। ऋत्विजः क्रमेण होमं कुर्युः।

अथान्वाधानोक्तहवनक्रमः आकृष्णेनेति नवग्रहहोमः। ॐ पराय पुरुषात्मने ब्रह्मवायुभ्यां स्वाहा–इत्यारभ्य–शनैश्चर धराभ्यां स्वाहा इत्यंतं। तत्वदेवताहोमः। ॐ सहस्रशीर्षा प्रत्यर्चं पुरुषसूक्त होमः। ॐ तत्सवितुः वरेण्यं० गायत्रीमंत्र होमः। तत्त- न्मूर्तिमंत्रहोमः। ॐ परदेवतायै श्रीलक्ष्मीनारायणाभ्यां स्वाहा०.... श्रीमदनंताय स्वाहा इत्यंतं पीठदेवता होमः। मूलमंत्रेण श्रीपरशु- रामं संपूज्य ध्यात्वा। अंगारवर्ण० प्रतिपादयंतं। ॐ भांभार्गवाय नमः स्वाहा। ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो

विष्णुः प्रचोदयात्स्वाहा । विष्णुगायत्र्या अयुतहोमः । जयविजयादि द्वारपालकदेवता होमः । इंद्रादिलोकपालक होमः । यदस्येति स्विष्टकृद्धोमः । इति होमकर्म ।

स्विष्टकृद्धोमात्पूर्व स्थापितदेवान् संपूज्य । स्विष्टकृदादि० प्रायश्चित्तहोमांते दिक्पालेभ्यः आदित्यादि नवग्रहेभ्यः द्वारपालेभ्यः क्षेत्रपालायच सदोपमाषभक्त बलीन् संकल्प्य यजमानद्वारा कारयेत् ।

"भूतानि यानीह वसंति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तं । अन्यत्र वासं परिकल्पयंतु क्षमंतु तान्यत्र नमोस्तु तेभ्यः ।"इति देवालयाद्बहिः उत्तरभागे निक्षिपेत् । यजमानः पाणी पादौ प्रक्षाल्य । आचम्य । इमं मंत्रं पठेत् । "ॐ शांता पृथिवी शिवमंतरिक्षं द्यौर्नो देव्यभयन्नो अस्तु । शिवादिशः प्रदिश उद्दिशोन आपो विश्वतः परिपांतु सर्वतः" शांतिः शांतिः शांतिः । पृथिवी शांता इत्यादि यजुःशाखिनां ।

पूर्णाहुत्यां मृडोनाम इति वचनान्यनुसृत्य पूर्णाहुतिकाले स्थापिताग्नौ मृडनामाग्निं प्रतिष्ठापयामि इत्यनुसंधाय अक्षतान् क्षिपेत् । द्वादशाष्टौ चतुर्गृहीतेन वा आज्येन स्रुचं पूरयित्वा समुद्रादूर्मिरितिसूक्तेन धामंतेत्यनया वा पूर्णाहुतिं जुहुयात् ।

"शते आज्याहुतिं दद्यात्सहस्रेत्वथ पूगकं । अयुते नारिकेलं स्यात्कूश्मांडं लक्षहोमके" । इति वचनात् हवनसंख्यानुसारेण कार्यं । तत्र क्रमः । पात्रे नवशूर्पे वा पूर्णाहुतिफलं निधाय । फले शंखचक्रं अंकयित्वा । वैभवानुसारेण गंधपुष्पाक्षत वस्त्रहिरण्यादिभिः सौभाग्यद्रव्यैश्चालंकृत्य मृडांतर्गत भारतीरमणमुख्यप्राणांत-

र्गत श्री संकर्षणाय नमः। इत्युपचारैः संपूज्य। तत् पूर्णफलं पात्रोपरि शूर्पेवा निधाय जुहुयात्। इति क्रमः।

समुद्रादूर्मिरिति एकादशर्चस्य सूक्तस्य गोतमो वामदेव आपो जगती। पूर्णाहुतौ विनियोगः ॐ समुद्रादूर्मिर्मधुमां उदार० मधुमंतंत ऊर्मिं स्वाहा। अद्भ्य इदं। इति पूर्णाहुतिं हुत्वा।

पूर्णाहुतिमुत्तमां जुहोति। सर्वं वैपूर्णाहुतिः। सर्वमेवाप्नोति। अथो इयं वै पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति। इति शंसनं कृत्वा।

ततः प्रणीता विमोकादि अग्न्यर्चनांतं कृत्वा। स्थापितदेवताः संपूज्य। अभिषेकावशिष्टकलशोदकं ग्रहकलशोदकं च पात्रांतरे गृहीत्वा। आचार्य ऋत्विगादयः 'समुद्रज्येष्ठा' इत्यादि मंत्रैः सपत्नीकं यजमानं अभिषिंचेयुः।

ततः मानस्तोकेति विभूतिधारणं शिष्ट संप्रदायानुसारेण कार्यं। श्रेयोग्रहो दक्षिणादि० इति वचनात् श्रेयोदानं श्रेयोग्रहणंच कारयेत्। ततोग्नेः पश्चिमतः आचार्यं संपूज्य। तस्मै वस्त्रयुगं द्विगुणदक्षिणां दद्यात्। स्थापितदेवानां उत्तरपूजां समाप्य। उत्तिष्ठ ब्रह्मणस्पते० यांतु देवेतिच विसृज्य प्रधानदेवतापीठं ग्रहपीठंच आचार्याय दद्यात्।

आदित्यादि नवग्रहप्रीत्यर्थं तत्तद् ग्रहधान्यानि नानानाम गोत्रेभ्यो ब्राह्मणेभ्यो संकल्पपूर्वकं दद्यात्। भूयसीं दक्षिणांच दद्यात्। यस्यस्मृत्येति विष्ण्वर्पणं–गच्छगच्छ इत्यग्निं विसृज्य। कर्मसांगतासिध्यर्थं यथाशक्ति ब्राह्मणान् भोजयित्वा। ब्राह्मणाः महाशांतिं पठेयुः। कृतस्यकर्मणः भगवति समर्पणं। कायेन वाचा

मनसेंद्रियैर्वा बुध्यात्मनावाऽनुसृत.स्वभावं । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् । अनेन संप्रोक्षणहवनकर्मणा भगवान् यज्ञपुरुषांतर्यामि हरिणीपति श्रीपरशुरामः प्रीयतां प्रीतो भवतु । मध्वांतर्गत श्रीकृष्णार्पणमस्तु ।

अशुचित्वं यदा भूयात्तदा संप्रोक्षणं भवेत् । (पराशरस्मृतौ)
संप्रोक्षणविधानस्य न कालनियमः स्मृतः ।

—तंत्रसारटिप्पण्यां ।

इत्यादि प्रमाणार्थं मनस्यनुसंधाय हरिस्मरणपूर्वकं सफलानि भवंतीत्यशेषमतिमंगलम् ।

**उपसंहार श्लोकाः ।**

अस्पृश्यसंपर्कमुखादि दोषै-
विदूषितानां सुरमंदिराणाम् ।
संप्रोक्षणादेर्विधिमत्रतंत्र-
सारोदितं वच्मि सतां मुदेऽहम् ।

अवाप्तजन्मा बुरलीकुलेऽच्छे
पदाब्जभक्तो मुरलोधरस्य ।
श्रीराघवेंद्रो हरिलीनचेताः
प्रावोचदार्यादिरलिप्सयैतम् ।

संप्रोक्षणविधिग्रंथः कृपासंप्रोक्षणाद्धरेः ।
हर्षसप्रोक्षणं कुर्यात्साधु प्रेक्षावतामयम् ॥

इति संप्रोक्षणप्रयोगः समाप्तः ।

---

## जीर्णोद्धार संप्रोक्षणग्रंथयो: उदाहृत ग्रंथानां ग्रंथप्रणेतॄणांच क्रमेण नामनिर्देश:

| | |
|---|---|
| तंत्रसार संग्रह: | श्रीमदाचार्यैर्विरचित: |
| च्छलारि टिप्पणी | च्छलारिनृसिंहाचार्य शिष्यैर्विरचित |
| स्मृतिमुक्तावलि: | श्री कृष्णाचार्य सगृहीता |
| निर्णयसिंधु: | श्री कमलाकर भट्टप्रणीत: |
| धर्मसिंधु: | श्री काशीनाथोपाध्यायरचित: |



## एतत्प्रयोग परिशोधका: प्रोत्साहकाश्च विद्वद्वरेण्या:

श्री "म"

महाव्याघ्रेत्युपाव्ह गोपालाचार्य: मुम्बई

वाणीविहार विद्यालय प्रधानाध्यापका:

अनवरत वेदार्थविचारतत्परा: पांग्रोताताचार्या:

न्यायवेदांतविद्वांस: बेळगांव

हुनगुंदेत्युपाव्ह केशवाचार्या:

न्यायवेदांतविद्वांस: गदग

मठकरेत्युपाव्ह बिंदाचार्या:

वैय्याकरणा: श्रौतस्मार्त विशारदा: मुधोळ

आद्यमध्वाचार्या:

तर्कतीर्था: वेदांतमीमांसाचार्या: काशी

टोणपे गोपालाचार्या:

आयुर्वेदाचार्या: साहित्य कोविदा: वारणासीस्था:

बिळूरोपाव्हा गोपालाचार्या:

साहित्यशास्त्र कोविदा: अथणी

# तंत्रसारोक्त जीर्णोद्धारसंप्रोक्षणयोः शुद्धिपत्रिका ।

| पुटे | अशुद्ध | शुद्ध | पंक्तौ |
|---|---|---|---|
| २ | गंधत्मने | गंधात्मने | ७ |
| ३ | ध्यायज्वलन | ध्यायेज्वलन | २१ |
| ४ | गर्भादानदि | गर्भाधानादि | १६ |
| ४ | मुसली | मुसली | २० |
| ५ | अग्नय | अग्नये | ५ |
| ५ | देवायदं | देव.येदं | ८ |
| ५ | हृष्ये | होष्ये | ५ |
| ७ | मूलमंत्रण | मूलमंत्रेण | ६ |
| ७ | आज्यन | आज्येन | ६ |
| ८ | गणपत्यतर्गत | गणपत्यंतर्गत | १३ |
| ९ | राशिकरण | राशीकरणे | ८ |
| १० | घृतपूरण | घृतपूरणे | ११ |
| १० | क्षेपण | शर्कराक्षेपणे | १५ |
| १२ | पूण | पूर्ण | २ |
| १३ | मत्र | मंत्र | १४ |
| १५ | पचगव्य | पचगव्य | ३ |
| १६ | जर्णोद्धार | जीर्णोद्धार | १६ |

द्वारपालदेवता:

चडप्रचंडादि संक्षेपत्वात् - अत्रोच्यते - चंडाय नमः - प्रचंडाय नमः। जयाय० विजयाय० धात्रेन० विधात्रेन० भद्रा - सुभद्रा - द्वौद्वौदिक्षु समर्चयेत्। इति द्वारपालदेवताः।



श्रीमदनंतो विजयतेतराम् ।

## महाजनेषु विज्ञप्तिः ।

अस्माकं वैदिक ग्रंथ प्रकाशनद्वारा नैमित्तिक कर्मसंग्रह नामकं अत्युपयुक्तं ग्रंथमेकं प्रकाशयितुं उत्सहामहे : तत्कार्य उदार चेतस्कानां महा जनानां सक्रिय सहानुभूति सहकारायत्तमिति जानीयुरेव विज्ञवाचकाः । तं सर्वजनोपयुक्तं सद्ग्रंथं समपेक्ष्यमाणा आदावेव स्वनाम धामादिकमावेदयंतु । बहुव्ययसाध्ये तद्ग्रंथमुद्रण-कर्मणि सर्वेऽपि आस्तिकाः आर्थिकसाहाय्यदानेन प्रोत्साहयन्तु ।

इति निवेद्यते सानुनयं सविनयंच ।

**नैमित्तिक कर्मसंग्रह विषयाः**




प्रकाशकः

**बुलिइत्युपाव्ह राघवेंद्राचार्यः**

वैदिकग्रंथ प्रकाशन निलय जोशीचाळ गदग

जि– धारवाड

श्रीमदनंतो विजयतेतराम् ।

**श्री १०८ श्री श्री फलिमारुमठ भंडारकेरि मठाधीश**
**श्री श्री विद्यामान्यतीर्थश्रीपादाः**

अस्माकं वैदिक ग्रंथ प्रकाशनकार्यार्थं १०१ रूप्यकाणि
अन्वगृण्हन्निति तान् सानन्दं अभिवन्दामहे



ईसवीये १९६८ वर्षे वैदिक ग्रंथ प्रकाशनार्थं साहाय्यदातृणां
महनीयानां नामानि ।

| **मुंबई** | **रूप्यकाणि** |
|---|---|
| श्रीमान् के. वि. उपाध्य | ५१ |
| **बेळगांव** | |
| श्री पं. गलगली रामाचार्याः | १० |
| ,, भीमाचार्य अंबेकर | १० |
| ,, नारायणाचार्य कित्तूर | १० |
| ,, रामाचार्य उडुपि | ५ |
| ,, सांगलीकर आचार्य | ५ |
| ,, कुकुनूर फौजदार | ५ |
| ,, मध्वराव बुद्धिकोट | ५ |
| ,, अंबेकर नरसिंहाचार्य | ५ |
| **विजापूर** | |
| श्री सुबणाचार्य कट्टी | १० |
| ,, वेंकटराव देशपांडे | ५ |
| ,, बिंदाचार्य मठकर मुधोळ | १० |
| ,, गुंडू रा. पूजार | १० |

| **अथणी** | **रूप्यकाणि** |
|---|---|
| श्री माधवेशाचार्य नरगुंद | २५ |
| श्री राघवेंद्रस्वामी मठ अथणी | |
| **बागलकोट** | |
| श्री श्रीनिवासाचार्य पंढरि | ५ |
| **रायचूर** | |
| श्री के. वेंकटाचार्य रायचूर | ५ |

अस्माकं अस्मिन् उपयुक्त वैदिक ग्रंथ प्रकाशनरूप पुण्य कर्माणि सविशेष साहाय्यमारचयन्निति तेभ्यो महद्भ्यः सानंदमभिनन्दनं विधाय समाशास्महे। तेषांसमेषामपि श्रेयःप्रेयश्च भूयोभूयः।

गदग
सौम्य सं. अनंतचतुर्दशी

बुर्लीत्युपाव्हः श्री राघवेंद्राचार्यः
वैदिकग्रन्थप्रकाशन निलयः, गदग

